( ५ ) नन्दनः । संन्यासःकाम्यकर्मत्यागः । तथाचोक्तंभगवद्गीतायाम् ॥ काम्यानांकर्मणांन्यासं संन्यासंकवयोविदुः । नियतस्य तु संन्यासः कर्मणोनोपपद्यते ॥ यज्ञोदानंतपश्चैवनत्याज्यं कार्यमेवतत् । यज्ञोदानंतपश्चैव पावनानिमनीषिणाम् ॥ एतान्यपि च कर्माणिसङ्गंत्यक्त्वाफलानिच । कर्तव्यानीतिमेपार्थनिश्चितंमतमुत्तममिति ॥ ९४ ॥

**संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन् ॥ नियतोवेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत् ॥ ९५ ॥**

**[ संन्यसेत्सर्वकर्माणि वेदमेकं न संन्यसेत् ॥ वेदसन्यासतःशूद्रस्तस्माद्वेदं न संन्यसेत्ऽऽ ॥ ]**

( १ ) मेधातिथिः । वेदमभ्यस्येति वेदस्यात्यागमाह । दर्शितमेतत् । अभ्यस्यन्निति शतृप्रत्ययान्तपाठोवा । पुत्रैश्वर्ये सुखंवसेत् । पुत्रग्रहणमुत्पन्नस्य पुत्रस्य अन्योपि यस्तत्स्थानः पौत्रादिस्तत्रापि युक्तोगृहान्तरन्यासइत्याहुः ॥९५॥

( २ ) सर्वज्ञनारायणः । सर्वकर्माणि नित्यनैमित्तिककाम्यानि वेदाभ्यासतदनुगुणदेहशुद्धिहेत्वाचमनस्नानसंध्याकर्मादिभ्योन्यानि संन्यस्य त्यक्त्वा संन्यासात् कर्मानुष्ठानाविनाभूतान्हिंसादिदोषानपानुदन्परिहरन् नियतोयमनियमवान् । अभ्यस्यन् सततमधीयानः । पुत्रैश्वर्ये पुत्रगार्हस्थ्ये तेन पञ्चमहायज्ञानुष्ठानंपुत्रेणैव कार्यं स्वयंतु वाच्येकेजुव्हतिप्राणमित्युक्तप्रकारेण स्वाध्यायेनैव पञ्चमहायज्ञाःसंपाद्याः । पुत्रस्यैवैश्वर्यंयद्गार्हस्थ्येनत्वात्मनइत्यभिधानेन वित्तेषु ममता पुत्रेणैव कार्या न स्वयं तथाचानीहोभूत्वा निवसेदिति गम्यते ९५ ॥

( ३ ) कुल्लूकः । सर्वाणि गृहस्थानुष्ठेयाग्निहोत्रादिकर्माणि परित्यज्याज्ञातजन्तुवधादिकर्मजनितपापानि च प्राणायामादिना नाशयन्नियतेन्द्रियउपनिषदोग्रन्थतोऽर्थतश्चाभ्यस्य पुत्रैश्वर्यइतिपुत्रगृहे पुत्रोपकल्पितभोजनाच्छादनत्वेन वृत्तिचिन्तारहितः सुखंवसेत् । अयमेवासाधारणोधर्मःकुटीचरकस्योक्तःइदमेववक्तुंवेदसंन्यासिनांत्विति पूर्वमुक्तम् ॥ ९५ ॥

( ४ ) राघवानन्दः । पुत्रैश्वर्येपुत्रदत्तभिक्षादौ ॥ ९५ ॥

( ५ ) नन्दनः । तत्तत्काम्यकर्मफलभोगानुरूपदेहप्राप्तयः । कर्मदोषास्तानपानुदंस्तेषामपनोदनहेतोः सर्वाणि काम्यकर्माणि संन्यस्य नियतोनियतकर्मकारीवेदमभ्यस्यञ्जपन् ॥ ९५ ॥

( ६ ) रामचन्द्रः । कर्मदोषानपानुदन दूरीकुर्वन् नियतःसन्वेदमभ्यस्य ओंकारंवा अभ्यस्य पुत्रैश्वर्येपञ्चयज्ञविधानंपुत्रेण कार्यं एवंविधः सुखंवसेत ॥ ९५ ॥

**एवंसंन्यस्य कर्माणि स्वकार्यपरमोऽस्पृहः ॥ संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम् ॥ ९६ ॥**

( १ ) मेधातिथिः । स्वकार्यमात्मोपासनं परमं प्रधानमस्येति स्वकार्यपरमः । अस्पृहः मनसापि स्पृहा न कचित्कर्तव्या ॥ ९६ ॥

( २ ) सर्वज्ञनारायणः । स्वकार्यपरमः स्वकर्तव्यनित्यकर्मविशेषस्वाध्यायमात्रपरः । अपहत्येनः संसारहेतुमधर्मम् । तदानेन गृहस्थएव धृत्यादिदशलक्षणधर्मानुष्ठानपरः स्वाध्यायनित्योऽनीहमानः पुत्रगृहे भुञ्जानोनित्यनैमित्तिककाम्यकर्मपरित्यागादविभितात्मदृष्टिर्वेदान्तार्थपरिभावनया ब्रह्मभवतीति दर्शितम् । तत्रस्नानाचमनसंध्योपासनानिस्वाध्यायाधिकारार्थमेवानुष्ठेयं संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मस्वितिवचनेन हि संध्यानुष्ठानमपि

---

ऽऽ ( क ) । अयमेवश्लोकः ( ञ, ड, ) चिन्हितपुस्तके इत्थंदृश्यते ॥ संन्यसेत्सर्वकर्माणिवेदंतुनपरित्यजेत् । परित्यागाद्धिवेदस्य शूद्रतामनुगच्छति ॥

शौचहेतुतया स्मर्यते यमानांनियमानांच मध्ये यावत्स्वाध्यायाविरोधस्तावदनुष्ठेयम् स्वाध्यायेच क्रियमाणे निरन्तरं तदर्थोऽनुसंधेयः अर्थज्ञानशून्यस्य तस्याल्पफलत्वादिति ॥ ९६ ॥

( ३ ) **कुल्लूकः** । एवमुक्तप्रकारेणवर्तमानोऽग्निहोत्रादिगृहस्थकर्माणि परित्यज्यात्मसाक्षात्कारस्वरूपस्वकार्यप्रधानः स्वर्गादावपि बन्धहेतुतया निस्पृहः प्रव्रज्यया पापानि विनाश्य ब्रह्मसाक्षात्कारेण परमांगतिंमोक्षलक्षणांप्राप्नोति ॥ ९६ ॥

( ४ ) **राघवानन्दः** । स्वकार्य परमः आत्मसाक्षात्कारप्रधानइति केचित् तत्र पुत्रैश्वर्यइति वचनात् । अविरक्ततया संन्यासाद्ब्रह्मणःस्थानमित्युक्तेश्च तदुपायनारायणमन्त्रोपासनया सह स्वधर्मानुष्ठानपरोभवेदित्यर्थः । संन्यासेनापहृत्य एनः पापं ॥ मनोवाक्कायकर्माणि मे शुध्यन्तांज्योतिरहंविरजाविपाप्माभूयासंस्वाहेतिमन्त्रलिङ्गादिति । परमांगतिं ब्रह्मलोकावाप्तिं प्राप्नोति । परमपदप्रयोगात्पुत्रैषणायाश्चेति श्रुतेश्च । तत्राप्याश्रमं विरक्तःसन्परमहंससंन्यासंकृत्वा वा मोक्षावाप्तिरिति ॥ ९६ ॥

( ५ ) **नन्दनः** । वेदसंन्यासिकस्य कर्मयोगानुष्ठाने फलमाह एवमिति । स्वकार्यपरःस्वस्यकार्यनियतःकर्मनिरतस्तत्फलेष्वस्पृहः ॥ ९६ ॥

## एषवोऽभिहितोधर्मोब्राह्मणस्य चतुर्विधः ॥ पुण्योऽक्षयफलः प्रेत्य राज्ञां धर्मं निबोधत ॥ ९७ ॥

## इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांषष्ठोध्यायः ॥ ६ ॥

( १ ) **मेधातिथिः** । चतुर्विधोधर्मश्चातुराश्रम्यम् । ब्राह्मणस्य सर्वमेतद्विहितम् । ननुच पूर्वंगृहाश्रमे स्थित्वाविधिवत्स्नातकोद्विजइति द्विजग्रहणमुपक्रमे श्रुतं तस्य चानुपजातविरोधित्वात्त्रैवर्णिकार्थिता निश्चिता अतश्चेदंब्राह्मणग्रहणं त्रैवर्णिकप्रदर्शनार्थमेव युक्तम् यद्येकवाक्यतोपक्रमोपसंहारयोर्न स्यात् । एकवाक्यत्वेतुबलवदुपक्रमार्थः शक्यः प्र-[illegible]तुं कृत्स्नवाक्यपर्यालोचनया योऽर्थःसनिश्चीयते । अतोद्विजग्रहणंब्राह्मणपरतयोपसंहर्तव्यम् । अस्ति ब्राह्मणस्य [illegible]जातित्वम् । नतुसर्वेषु द्विजातिषु ब्राह्मण्यम् । अत्रापि द्विजशब्दार्थे संभवति नान्वयिनि लक्षणा न्याय्या । तथाच महाभारते शूद्रस्यापि त्रयआश्रमाः श्रूयन्ते शुश्रूषाकृतकृत्यस्येत्युपक्रम्य आश्रमाविहिताः सर्वे वर्जयित्वा निरामिषम् । पारिव्राज्यमित्यर्थः । नैवं तस्यायमर्थः सर्वआश्रमास्तु न कर्तव्याः किंतर्हि शुश्रूषयाऽपत्योत्पादनेन च सर्वाश्रमफलंलभते द्विजातीन् शुश्रूषमाणोगार्हस्थ्येन सर्वाश्रमफलंलभते परिव्राजकफलंमोक्षंवर्जयित्वा अतोब्राह्मणधर्मएव चातुराश्रम्यमितिसिद्धम् ॥ ९७ ॥ इति भट्टवीरस्वामिसूनोर्भट्टमेधातिथिकृतौ मनुभाष्ये षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥

( २ ) **सर्वज्ञनारायणः** । उपसंहरति एषवइति । चतुर्विधः आश्रमभेदात् ब्राह्मणस्यैव चतुर्विधोन्येषांतु द्विजातीनांत्रिविधएव । संन्यासे तेषामनधिकारात् शूद्रस्यतु गार्हस्थ्यएवाधिकारादेकविधएव । ब्राह्मणस्येत्यत्र केचित् बौधायनेन परिव्राजकधर्मं प्रक्रम्य स्त्रीणांचैकइतिवचनात्पुल्लिङ्गमविवक्षितमित्याहुः एकग्रहणाद्बौधायनस्यापि स्त्रीणांपारिव्राज्यं नापेक्षितमितिविवक्षितमेव पुल्लिङ्गमित्यन्ये । चतुर्विधोपि पुण्यः स्वर्गहेतुपुण्यजनकः अक्षयफलोमोक्षहेतुः ॥ ९७ ॥

श्रीनारायणसर्वज्ञकृता वृत्तिर्मनुस्मृतेः । कुनिबन्धकृतव्याख्यामियंदूरे निरस्यते ॥ इतिसर्वज्ञश्रीनारायणकृतौ मनुस्मृत्यर्थविवृतौ वानप्रस्थयतिधर्मोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥

( ३ ) कुल्लूकः । ऋषीन्संबोध्यउच्यते । एषयुष्माकंब्राह्मणस्य संबन्धी क्रियाकलापोधर्मस्तस्यैव ब्रह्मचारिगृहस्थवानप्रस्थादिभेदेन चतुर्विधः परत्राक्षयफलउक्तः । इदानीराजसंबन्धिनंधर्मंशृणुत । अत्र च श्लोके ब्राह्मणस्य चातुराश्रम्योपदेशाद्ब्राह्मणः प्रव्रजेदितिपूर्वमभिधानाद्ब्राह्मणस्यैवप्रव्रज्याधिकारः ॥ ९७ ॥ ॥ ७ ॥ ॥ ७ ॥

इतिश्रीकुल्लूकभट्टविरचितायांमन्वर्थमुक्तावल्यांषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥

( ४ ) राघवानन्दः । वोयुष्मभ्यं चतुर्विधः ब्रह्मचर्यादिभेदभिन्नः पुण्यः पुण्यप्रदः अक्षयफलः अक्षयंद्विपरार्धकालपर्यन्तं स्थायिफलंयस्यसः ॥ ९७ ॥

इति श्रीराघवानन्दविरचितायां मन्वर्थचन्द्रिकायां षष्ठोध्यायः ॥ ६ ॥ ॥ ७ ॥

इति नन्दनाचार्यविरचिते मानवव्याख्याने षष्ठोध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥

इति श्रीमानवे धर्मशास्त्रे रामचन्द्रविरचितायां टीकायांषष्ठोध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥

---

